

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 06
September-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

सेप्टेम्बर् - २०२३ रू. २०/-

22-09-2023
भृगुवासरः
प्रातः - आन्दोलिकायां
मोहिन्यवतारोत्सवः

## तिरुमल
## श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवाः
2023 सेप्टेम्बर् 18 तः 26 पर्यन्तम्

तिरुमलतिरुपतिदेवस्थानानि



तिरुमल

# श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः

## २०२३ अक्टोबर् १५ तः २३ पर्यन्तम्

15-10-2023
भानुवासरः
प्रातः - स्वर्ण तिरुच्चि उत्सवः
रात्रौ - महाशेषवाहनम्

16-10-2023
इन्दुवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

17-10-2023
भौमवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्टपम्

18-10-2023
सौम्यवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

19-10-2023
बृहस्पतिवासरः
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

20-10-2023
भृगुवासरः
प्रातः - हनुमद्वाहनम्
रात्रौ - गजवाहनम्

21-10-2023
मन्दवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

22-10-2023
भानुवासरः
प्रातः - स्वर्ण रथोत्सवः
रात्रौ - अश्ववाहनम्

23-10-2023
इन्दुवासरः
प्रातः - चक्रस्नानम्
रात्रौ - तिरुच्चि उत्सवः

# गीतामृतम्



श्रीभगवानुवाच -

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः।।

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ।।

(भगवद्गीता २-११-१२)

श्रीभगवान उक्तवान् हे अर्जुन!

भावः - येषां विषये शोकः न कर्तव्यः तेषां विषये शोकमनुभवति भवान्। प्रज्ञावन्तः यथा भाषणं कुर्वन्ति तथा प्रगल्भवचनानि भवान् वदति। पण्डिताः मृतान् उद्दिश्य न शोचन्ति।
कस्मिंश्चिदपि काले अहं न अस्मि इति न। भवान् नास्तीति न। इमे राजानः न सन्ति इत्यपि न। आगामिनि काले वयं न भविष्यामः इत्यपि। सर्वे सर्वदा सन्ति एव।

# सङ्कीर्तनम्



नमाम्यहं मानवसिंहं
प्रमदाङ्कमहोबलनरसिंहं ।।नमा।।

दानवदैत्यविदारणसिंहं
नानायुधकरनरसिंहं
भूनभोंतरापूरितसिंहं
आननवह्निलयांकसिंहं ।।नमा।।

प्रलयनृसिंहं बहुमुखसिंहं
सललिगरुडाचलसिंहं
कुलिशनखरमुखघोषितसिंहं
तिलकितबहुरविदीपितसिंहं ।।नमा।।

शान्तनृसिंहं शौर्यनृसिंहं
सन्ततकरुणाजयसिंहं
कान्तश्रीवेङ्कटगिरिसिंहं
चिंतितघनसंसिद्धिनृसिंहं ।।नमा।।

(अन्नमाचार्यसङ्कीर्तनम्)



# श्रीवीथीषु भ्राजिष्णुः देवदेवः

भारतीयसनातनधर्मस्य संस्कृतिसम्प्रदायविचाराणां समेषामपि तत्र आधारो भवति देवालयसम्प्रदायः। अमीषां परिकल्पनं सर्वजनहिताय लोककल्याणाय पूर्वजैरस्माकम् अकारि। भक्त्या भगवदाराधनं संस्कृतिरस्माकम्। समस्तपुरुषार्थसाधनस्य जातिसमुन्नतेश्च समुन्मुखसाधनस्य च देवालयाः नितान्तम् उपकारिणः सन्ति। मुमुक्षूणां तितिक्षूणां तपस्विनां निर्वाणसाधनाय अमी भृशम् उपकुर्वन्ति। अत एव पवित्रतीर्थक्षेत्रसन्दर्शनमात्रेणैव भक्तजनानाम् आत्मानः भृशम् उल्लसन्ति।

समस्तब्रह्माण्डे तिरुमलक्षेत्रसदृशं नान्यत्किञ्चन दिव्यस्थानमस्ति। तथैव तेषु महीधरेषु निवासिनः श्रीवेङ्कटेशस्वामिनः प्रतिस्पर्धी न कश्चन देवोऽस्ति। न प्रागपि आसीत्। न वा भावि भविष्यति। शताधिकदिव्यतीर्थक्षेत्रैः बहुभिरपि शैलैः समञ्चितमिदं सप्तगिरिक्षेत्रं निरन्तरमनन्तभक्तजनसन्दोहेन सदा विभ्राजते। क्षेत्रेऽस्मिन् प्रत्यहमपि उत्सवः एव। प्रतिपूजनं परमान्नानि दिव्यप्रसादाश्च।

सुप्रभातम्, सहस्रनामार्चनम्, नित्यकल्यणोत्सवः, डोलोत्सवः, सहस्रदीपालङ्करणसेवा, एकान्तसेवेत्यादिनित्योत्सवैः विशेषाराधनैस्तत्र अष्टदलपादपद्माराधनम्, सहस्रकलशाभिषेचनम् तिरुप्पवाड, शुक्रवाराभिषेचनसदृशैः वारोत्सवैः, पुष्पयागः, पवित्रोत्सवः, उडुपोत्सवः, ज्येष्ठाभिषेचन

सदृशैः वर्षोत्सवैः श्रीदेवीभूदेवीसमवेतश्रीरङ्गनिलयाधीश्वरस्य श्रीवेङ्कटाधीश्वरस्य वैभवं वैभोगं च वचनैर्वर्णयितुम् अशक्यम्। एवमेतेषु महोत्सवेषु वर्षे सकृत् प्रवर्तमानाःदशदिनव्यापिब्रह्मोत्सवाः नितान्तं प्रामुख्यम् आवहन्ति।

ब्रह्मोत्सवाः ध्वजारोहणेन आरभ्य ध्वजावरोहणेन समाप्यमानाः दशदिनपरिव्यापिनः महोत्सवाः। ध्वजारोहणात्पर्वूं तिरुमल श्रीवेङ्कटेश्वरनिलये कोयिल् आळ्वार् तिरुमञ्जनमिति नाम्ना आलयं समन्ततः संशुध्य महाशोभाञ्चिततया समस्तदेवमुनिभक्तजननयनानन्दकरत्वेन महार्भटम् अलङ्करणं विदधति।

प्रथमे ध्वजारोहणदिने वैखानसागमनियमानुसारम् अर्चकस्वामिनः गरुडध्वजं श्रीस्वामिमन्दिरे विद्यमानस्य स्वर्णध्वजस्तम्भस्य उपरि समुत्तोलयन्ति। समस्तदेवानां समाह्वानसूचकेन ध्वजारोहणकार्यक्रमेण प्रारब्धाः इमे ब्रह्मोत्सवाः नवदिनेषु महता वैभवेन प्रवर्तन्ते। प्रत्यहमपि प्रातस्सायं यामद्वयेऽपि एकैकं वाहनम् अध्यारोप्य श्रीस्वामिनं श्रीवीथीषु सर्वत्र सञ्चारयन्ति।

दशदिनमहोत्सवेषु प्रथमदिने ज्येष्ठशेषवाहनेन प्रारब्धेषु श्रीस्वामिब्रह्मोत्सवेषु पञ्चमदिनस्य रात्रिवेलायां प्रवर्तमानः गरुडोत्सवः नवमदिनस्य प्रातः प्रवर्तमानः रथोत्सवश्च नितान्तदर्शनीयः भवति। लक्षशो भक्तसमवायाः महता कोलाहलेन गोविन्दनामघोषैश्च सप्तगिरिसानून् प्रतिध्वनयन्ति। एवं साक्षाद्वैकुण्ठलोके भगवन्तं नारायणं दर्शयन्तः इमे महोत्सवाः इतिहासे चिरस्थायिनो भवन्ति।

वर्षेऽस्मिन् सेप्टेम्बरमासस्य १८ दिनाङ्कादारभ्य २६ दिनाङ्कपर्यन्तं श्रीवेङ्कटेश्वरस्य ब्रह्मोत्सवाः महता प्रकर्षेण भविष्यन्ति। प्रत्यहं वैभवेने प्रतिप्रहरं वैभोगने दशदिनेषु निरन्तरतया प्रवर्तमानानां सप्ताद्रिनाथस्य महोत्सवानां वैभवस्य दर्शनं भक्तजनानां महाद्भुतया आनन्दानुभूत्या कमलापतेराशीर्वचांसि च बाढम् आप्नुवन्ति। विश्वमूर्तेः प्रवर्तमानाः इमे महोत्सवाः सर्वैरपि आचक्षुस्तर्पणम् अभिवीक्षणीयाः। मनसि मलिनविचाराः परिमार्जनीयाः। ईदृशेषु पवित्रदिव्योत्सवेषु केवलम् उपस्थितिरेव अलम्। तस्य जन्म धन्यताम् अञ्चति। दशदिनपरिव्यापितया परंधाम्नः महोत्सवेषु पवित्रतया त्रिकरणशुद्ध्या च बाढम् उपस्थाय अस्मज्जीवनं सार्थकं सम्पादयेम।

# सेप्टेम्बर् २०२३

सम्पुटिः-१०    सञ्चिका-०६

श्रीशोभकृत्संवत्सरस्य निजश्रावण शुक्लद्वितीया तः
श्रीशोभकृत्संवत्सरस्य भाद्रपदकृष्णप्रथम पर्यन्तम्-११४४



**मुखचित्रम् –** तिरुमलक्षेत्रे, मोहिन्यवतारे अलङ्कृत श्रीमलयप्पस्वामी।

**अन्तिमरक्षापुटः –** तिरुमलक्षेत्रे, स्वामिनः रथयात्रा।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org


एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यातिमकसचित्रमासपत्रिका

गौरवसम्पादकः:-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.),
ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः -डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,
छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः,
सहायक-छायाचित्रग्राहकः, ति.ति.दे.




सूचना
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
– प्रधानसम्पादकः

# उत्सवेषु प्रधानः ब्रह्मोत्सवः










- श्वेतपद्मा शतपथी
चरवाणी - ९०००६०५३५४

भगवतः श्रीवेङ्कटेश्वरस्य मन्दिरे महता वैभवेन ब्रह्मोत्सवः परिपाल्यते। अस्मिन् उत्सवे बहूनां जनानाम् एकत्र समागमो भवति। तस्य कारणमिदं यत् अखिलाण्डकोटि-ब्रह्माण्डनायकस्य श्रीवेङ्कटेश्वरस्य सान्निध्यं प्राप्तुम्।

**ब्रह्मोत्सवस्य प्राधान्यम् -** वैष्णवानाम् उत्सवेषु अयमतीव महत्त्वपूर्णमहोत्सवः। समग्रेऽस्मिन् देशे विष्णोः मन्दिरे ब्रह्मोत्सवः दृश्यते। साम्प्रतं तिरुमलक्षेत्रे पुनश्च श्रीरङ्गरङ्गनाथमन्दिरे च महता हर्षेण ब्रह्मोत्सवं भक्ताः पालयन्ति।

**ब्रह्मोत्सवस्य कालनिर्णयः -** साक्षात् भगवता ब्रह्मणा विष्णोः स्तुतिः कृता। तत्परम् अयमुत्सवः प्रारब्धः। भगवता ब्रह्मणा विष्णोः स्तुतिमाध्यमेन ब्रह्मोत्सवस्य पालनं क्रियते। श्रूयते यत् ब्रह्मा श्रीवेङ्कटेश्वरं प्रार्थितवान्। एवंरूपेण अयमुत्सवः परिपाल्यते।

**ब्रह्मोत्सवे रीतयः -** प्रतिवर्षम् अस्मिन् उत्सवकाले काश्चनरीतयः संस्थाप्यन्ते। यथा - १. ध्वजारोहणम्, २. गरुडसेवा, ३.रथोत्सवः ४. चक्रस्नानम्

आदौ ध्वजारोहणमाध्यमेन ब्रह्मोत्सवस्य प्रारम्भः क्रियते। अस्मिन् उत्सवे मलयप्पप्रभोः वीथीभ्रमणं भवति। भगवतः सुदर्शनचक्रमानीय वराहस्वामिमन्दिरे चक्रस्नानं भवति। विविधेषु वाहनेषु भगवान् भ्रमति। ध्वजारोहणकाले विष्णोः ध्वजस्थापना अत्र भवति यत्र गरुडस्यापि चित्रमस्ति। षष्ठे दिने सुवर्णरथे भगवान् उपविशति। अतः ब्रह्मोत्सवस्तु रथोत्सवनाम्ना ज्ञायते। भगवतः विष्णोः हनुमतः दर्शनवेलायां भक्ताः सानन्देन परस्परं फलानि, मिष्टान्नं ददति। हिन्दूतिथ्यनुसारं प्रायः सेप्टेम्बर अक्टोबर मासयोः मध्ये इदं पर्वं परिचाल्यते। अलंकार-पुष्प-सुन्दरवस्त्रैः मण्डितं भगवतः दिव्यरूपं दर्शनम् अलौकिकमानन्दं जनयति।

**ब्रह्मोत्सवस्य पालनविधिः -** उत्साहस्य विषयोऽयं यत् अधिकमाससन्दर्भे ब्रह्मोत्सवद्वयं परिपाल्यते। एकः वार्षिकोत्सवः, अपरः नवरात्रब्रह्मोत्सवः। तिरुमलायां पेरटासिनाम्ना तामिलमासस्य गणना अस्ति। वर्षे रथसप्तमीतिथौ एकदिनं ब्रह्मोत्सवः परिपाल्यते। कदाचित् भक्तानां निर्देशानुसारं प्रत्यहं शेषगरुड-हनुमद्वाहनेषु ब्रह्मोत्सवः सम्पाद्यते। १५५१ संवत्सरे सर्वाधिकतया एकादशवारम् अस्य उत्सवस्य आयोजनमासीत् इति। आदिवराहक्षेत्रे भगवतः श्रीवेङ्कटेश्वरस्य दिव्यभव्यनव्य ब्रह्मोत्सवः महता वैभवेन परिपल्यते। वयमपि तिरुमलां गत्वा एतादृशे ब्रह्मोत्सवे भागं गृहीत्वा सर्वविधमङ्गलं भगवतः कृपामनुग्रहं च प्राप्नुमः। विभिन्नेषु पर्वसु भगवत आविर्भावः सर्वेषां कृते मङ्गलदायकं याति, सर्वं शुभमयं च भवति।

गोविन्देति सदा स्नानं गोविन्देति सदा जपः।
गोविन्देति सदा ध्यानं सदा गोविन्दकीर्तनम्।।

ओं नमो वेङ्कटेशाय



# शिक्यक्रीडा रहस्यम्

- डा.कडिमिल्ल वरप्रसादः
चरवाणी - ९२४७८७९६०६

**श्रीकृष्णो मम देवता यदुवरं कृष्णं भजे धार्मिकम्**
**कृष्णेनाप्रतिमेन सर्वजगती संवर्धते राजते।**
**कृष्णायैव नमोऽस्तु मे मन इदं कृष्णान्नगच्छेद् बहिः**
**कृष्णस्याहमहं वसामि सततं कृष्णेहि कृष्णाव माम्।।**

भारतीयानां सन्ति अनेके पर्वदिवसाः। ते सर्वे भक्तिप्रधाना एव केवलम्। किन्तु एक एव पर्वदिवसः बालानां युवजनानां च अत्यन्तम् उत्साह जनकः, स एव कृष्णाष्टमीदिवसः। तस्यैव जन्माष्टमी इति व्यवहारः।

श्रीरामः राजभवने जन्म लेभे दिवासमये। जन्मन आरभ्य तत्रैव बाल्यं नीतवान्। श्रीकृष्णस्तु कारागारे गाढयामिन्यां लेभे जन्म। तत्रैव स्थितो वा? नहि। तस्मिन्नेव अर्धरात्रे कारागारात् बहिरागत्य अतिमात्र वर्षसमये यमुनानदीं तीर्त्वा यादवकुलनेतुः नन्दस्य गृहं गतवान् पितुः वसुदेवस्य साहाय्येन रामो राजभोगात्मकं जीवितमनुबभूव महाभवने। कृष्णो गोरक्षणात्मकम् अतिसामान्यमेव जीवितनुबभूव साधारण मन्दिरे। बाल्यानन्तरे रामो बहुकष्टात्मकं जीवितं वासुदेवो महाभागमयं जीवितमनुबभूवतुः। य आरम्भसमये सुखमयं जीवितमनुभवति स पश्चाद् बहुकष्टमयं जीवितमनुभविष्यति। यः बाल्ये कष्टमयं जीवित मनुभवति स उत्तरकाले सुखं प्राप्नोतीति रामकृष्णयोरवतार रूपेण भगवान् नारायणः सन्देशं दत्तवान्।

रामो बाल्येऽपि गम्भीर एव। शैशवसम्बन्धिचापल्यं वा क्रीडोत्साहो वा न दृश्येते। केवलं क्रमशिक्षणात्मकं जीवितं रामस्य आबाल्यात्। कृष्णस्य तु बाल्ये चपलता दृश्यते। क्रीडोत्साहश्च। संपन्न गृहेषु संजातानां पुरुषाणां बाल्यं नानन्दमयं भवति यथा साधारणगृह संजातानाम् पुरुषाणामिति ज्ञायते अनयो र्जीविताभ्यां विचित्राभ्याम्।

कृष्णस्य शैशवमतिमात्रोत्साह सन्धायकं सर्वेषां, विशिष्य बालानां युवजनानामपि। कृष्णस्य बाल्ये ह्यनेके सन्ति मनोहर सन्निवेशाः। तेष्वत्यन्त मनोहारिणी शिक्यस्थ नवनीतचोरता श्रुतौ तस्करता स्थिता इत्युकतवान् कालिदासः रघुवंश

महाकव्ये। तथैव भिक्षाटनमपि न श्रृष्ठगुणः किन्तु परमेश्वरेणाचरितम् किमर्थम्? भक्तिमेव भिक्षारूपेण गृह्णाति शिवः मोक्षं प्रदातुम्। मोक्षसाधनसामग्र्यां भक्तिरेव गरीयसी इति खलु। किन्तु केचन भिक्षां ददति केचन न ददति। ये नेच्छन्ति भिक्षाप्रदानं कर्तुं तेषामपि मोक्षं प्रदातुं चोरतामाश्रितवान् श्रीकृष्णः। नवनीतमेव चोरितवान्। किमर्थमितिचेत् प्रथमरूपं क्षीरम्। द्वितीयं दधि। तृतीयं नवनीतम्। तुरीयमाज्यम्। पुरुषार्थेषु तुरीयो मोक्षः। तृतीयं कामरूपं नवनीतं ये न ददति भिक्षारूपेण तेभ्यो गृह्णाति चौर्यरूपेण। तत्फलरूपेण मोक्षं ददाति। बाल्यमित्रादपि कुचेलात् बलवत् स्वीकृताः खलु पृथुकाः। तदेव श्रीकृष्णस्य लक्षणम्।



अत एव जन्माष्टमी पर्वदिवसे भक्तिरूपं वा कामरूपं नवनीतं समर्प्य कृष्णाय प्रतिफलरूपेण मोक्षं प्राप्तुं शिक्यताडनक्रीडायां महोत्साहवन्तो भवन्ति बालका युवजनाश्च वयं स्वच्छन्दभक्तिप्रदानं न कुर्मः। तथैव कामसमर्पणमपि स्वयं न कुर्मः। तस्मात् हे कृष्ण, त्वमेव स्वयं स्वीकुरु भक्तिरूपनवनीतं अथवा कामरूपनवनीतम्। तत्समये तव विघ्नं कर्तुं जलताडनादिकं करिष्यामो वयं क्रीडारूपेण। तथापि यथाकथं वा स्वीकुरु इति प्रार्थनारूपेण शिक्यक्रीडा प्रचाल्यते सर्वत्रापि भारतदेशे, विदेशेष्वपि यत्र सन्ति भारतीयाः।



तस्मात् कारणात् ये जनाः जन्माष्टमीपर्वदिवसे शिक्यक्रीडां क्रीडन्ति ते मुक्तिमार्गगामिनो भवन्तीति निश्चप्रचम्। इति शम्।





(तदनन्तरम्)

भगवान् शिवः वेङ्कटाचलं गत्वा स्वामिपुष्कारिण्यां स्नानं कृत्वा ब्रह्महत्या पातकात् मुक्तिं प्राप्स्यतीति अवदत्। कुमारस्वामि स्वपितृवचनं पालितवान्। सः स्वामिपुष्कारिणी स्नानं कृत्वा, भगवन्तं यज्ञवराहमूर्तिं, श्रीवेङ्कटेश्वरं च पूजयित्वा ब्रह्महत्यापातकात् मुक्तः अभवत्। अतः एव एतत् स्थानं महत्त्वेन प्रसिद्धम्। अतः भगवान् कृष्णेन स्कन्दः स्वस्य महत्त्वं परिचितानाम् जनानां समावेशितः अस्ति। कृष्णः भगवद्गीते उक्तवान् ''सेनानीनाम स्कन्दोहम - अहम सेनानाम् स्कन्दः''। श्रीस्वामि पुष्करिणी माहात्म्यं वचनैः व्याख्यातुं न शक्नुमः। तेषां माहात्म्यं वचनात् परम्।

वैकुण्ठवासी श्रीमहाविष्णुः अधर्मनाशाय धर्मस्थापनाय च बहून् दिव्यावतारान् स्वीकृतवान्। श्रीमहाविष्णुः दैत्यराजं हिरण्याक्षं हन्तुं यज्ञवराह अवतारं

- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

गृहीतवान्। हिरण्याक्षस्य बन्धनात् पृथिवीं मोचितवान्। ब्रह्मा ततः श्रीमन्नारायणं प्रार्थयामास ''श्रीमहाविष्णो! भवता यज्ञवराहस्य अवतारं स्वीकृश्य लोककल्याणार्थम् पृथिव्यां प्रादुर्भवतु इति सूत मुनिः पवित्र नैमिशारण्ये आध्यात्मिक विषयं वदन् मुनिभ्यः अवदत् ''भगवान् श्रीमहाविष्णुः चतुर्मुखब्रह्मणः प्रार्थनाम् अङ्गीकृत्य वेङ्कटाचले प्रादुर्भूतः। वैकुण्ठे श्रीमहाविष्णुः इति स्वर्गे लोके चक्रधारी इति, वेङ्कटाचले श्वेतवराहमूर्ति इति प्रसिद्धः।

पुण्यकथां श्रुन्वन् मुनयः सूत महर्षिं ''हे सूत महर्षि! यज्ञवराहमूर्तेः अवतारं कथयन् भवता शेषाद्री, क्रीडापर्वतं, वेङ्कटाचलम्, वेङ्कटगिरि इति पर्वतस्य नामानि उक्तम्। इदं तावत् आश्चर्यम्। तस्य विषये कथयतु। कथं कस्यचित् स्थानस्य एतानि अनेकानि नामानि सन्ति इति वयं आश्चर्यचकिताःस्म। वेङ्कटाचलस्य अन्यनामानि श्रोतुं वयं बहु उत्साहिताः स्मः। कृपया वदन्तु इत्याह''।

सूत मुनिः अवदत् यत् एतत् स्थानम् भक्तानाम् सर्वे ईप्सित दायकम् अस्ति अतः चिन्तामणि पर्वतम् इति उच्यते। अयं पर्वतः ज्ञानस्य निलयः।



जनाः परिपूरण ज्ञानम् अत्र प्राप्नुवन्ति अतः ज्ञानद्रि इति निर्दिश्यते। तीर्थं नाम मोक्षदायकं इत्यर्थः। वेङ्कटाचल स्वामिपुष्करिणीतीर्थे ये स्नानं करिष्यन्ति ते धन्याः भविष्यन्ति। अपि च अस्मिन् वेङ्कटाचले बहवः तीर्थाः सन्ति। अतः वेङ्कटाचलं नाम तीर्थाचलम् इति।

ज्ञानं जगति महत्। ज्ञानेन एव मनुष्यः मोक्षं प्राप्नोति। अस्य पर्वतस्य स्मरणं भ्रमणं च ज्ञानं जनयति। अत एव अस्य पर्वतस्य ज्ञानाद्री इति नाम प्राप्तम्।

निष्काम योगिनां तपोधनानाम् च उत्तमम् अयं पर्वतः पुष्करशैलम् इति नाम्ना यतः नित्यपूजादिकानां कृते अनेकाः पुष्कररिण्यः सन्ति। अयं पर्वतः वृषभाद्री इति कथ्यते यतः भगवान् वृषभः अस्मिन् पर्वते तपं कृतवान्।

अस्य पर्वतस्य सुवर्णशिखरदर्शनेन सर्वे देवताः सुखं अनुभवन्ति इति कारणात् एतत् पर्वतः कनकाचलम् इति उच्यते। अयं पर्वतं नारायणाद्री इति प्रतिपादितः यतः महान् भक्तः नारायणः अस्मिन् पर्वते तपं कृतवान्।

यतः भवता मां पृष्टं यत् अस्य पर्वतस्य श्री वेङ्कटाद्री इति नाम किमर्थं प्राप्तम्, अहं भवन्तं वक्ष्यामि, शृणुत, श्रीमान्नारायणः गरुडं श्री वैकुण्ठात् क्रीडाद्रीपर्वतं आनयितुं आज्ञापितवान्। गरुडः श्री वैकुण्ठात् क्रीडाद्रीम् आनयत्। एतत् पृथिव्यां स्थापितवान्। अतः अस्य श्री वेङ्कटाद्री इति नाम प्राप्तम्।

अयं महान् पर्वतः श्रीनरसिंहगिरिः इति अपि उच्यते यतः भगवान् श्रीमहाविष्णुः स्वस्य प्रियभक्तं प्रह्लादं तारयितुं नरसिंहस्य अवतारं गृहीतवान्। नरसिंहः अस्मिन् स्थाने हिरण्यकशिपुं मारितवान्। अतः नरसिंहगिरि इति नाम प्राप्तवान्।

आश्चर्यं यत्, अञ्जना देवी पुत्रस्य कृते अस्मिन् पर्वते तपं अकरोत्। भगवतः आशीर्वादेन हनुमान् जातः। अतः अयं पर्वतः आञ्जनाद्री इति कथ्यते। अहं भवद्भ्यः अस्य पर्वतस्य विषये एकं अधिकं रोचकं वक्ष्यामि, श्रीमन्नारायणः श्री वराहमूर्ति अवतारं गृहीतवान् यतः एतत् स्थानं वराहसन्ततिभिः समृद्धम् अस्ति। अतः एतत् स्थानं वराहाद्री इति उच्यते।

नीलः नाम वानरः अस्मिन् पर्वते चिरकालम् अवसत्। अतः अयं पर्वतः नीलगिरीन्द्रः इति उच्यते। अस्य पर्वतस्य विषये रहस्यं वक्ष्यामि। अतः सम्यक् शृणुत, श्रीनिवासम्। सर्वान् मनुष्यान् प्रति सर्वान् वरान् च प्रयच्छति। अतः अयं पर्वतः श्रीनिवासपर्वतः इत्यपि उच्यते।

न केवलमेतत् श्रीमहालक्ष्मी भक्तानां सर्ववरदानाय श्रीमन्नारायणस्य वक्षस्थलं स्वनिवासं कृतवती। सा सर्वभूतेभ्यः आनन्दं ददाति अतः अयं पर्वतः आनन्दाचलम् आनन्दगिरी इत्यपि उच्यते।

श्रीसतिः अस्मिन् पर्वते सदा वसति। अतः एतत् पर्वतं श्रीसद्गिरी इत्यपि कथ्यते।

(अनुवर्तिष्यते)



## जूलै २०२३ लघुप्रश्नोत्तरी समाधानानि

१. श्रीकृष्णः
२. चतुर्दशमासेषु
३. प्रद्युम्नः
४. विश्वकर्मा!
५. आरोग्य व्रतम्
६. लक्ष योजनानि
७. कृष्णयजुर्वेदे
८. गौडपादः
९. धनपाठः
१०. निकुम्भः
११. विभाण्डकः
१२. धृतराष्ट्रस्य
१३. वेला
१४. इल्वलः
१५. सुषेणस्य



तिरुमलतिरुपतिदेवस्थानानि

## अस्मिन् वत्सरे श्रीवेङ्कटेश्वर स्वामिनः वारद्वय ब्रह्मोत्सवाः

### जय जय गोविन्द! तिरुमल गोविन्द! गोविन्द! गोविन्द!

आवत्सरं स्वामिनः बहवः उत्सवाः शोभायात्राः च भवन्ति। तथापि वर्षे दशदिनानि यावत् आयोजिताः "ब्रह्मोत्सवः" तिरुमल इतिहासे सर्वादिक महत्त्व पूर्णाः भवन्ति।वेङ्कटाचल क्षेत्रे प्रकाशमानः श्रीनिवासः भगवान् ब्रह्मम् आहूय जगतः कल्याणार्थं उत्सवस्य आयोजनं उत्कृष्टेन कारयतु इति आज्ञां दत्तवान्। श्री स्वामिनः आदेशानुसारं ब्रह्मदेवः एते उत्सवान् वैभवेन आयोजितवान्। तदर्थमेव अस्य नाम ब्रह्मोत्सवः इति ख्यातिं जगाम।

चान्द्रमान रीत्या प्रति तृतीयवर्षे अधिकमासः आगच्छति। एतादृशेषु सति कन्या (भाद्रपद) भाद्रपद मासे नाम कन्या मासे आयोजमान उत्सवान् वार्षिक ब्रह्मोत्सवाः इति नवरात्रिषु आयोजमान उत्सवान् नवरात्रि ब्रह्मोत्सवाः इति व्यवह्रियन्ते। अधिकमासः यदा न भवति तदा कन्यामासः नवरात्रयः मिलित्वा एव आगच्छन्ति। तदा एकः ब्रह्मोत्सवाः एव भवति। अधिकमासस्य आगमनसमये विशेषतया आचरितस्य द्वयोः ब्रह्मत्सवयोः मध्ये महत् अन्तरं न भवति। किन्तु, द्वितीये ब्रह्मोत्सवे ध्वज उत्थापने, ध्वज अवरोहणं न भवति। इच्छानुसारं रथोत्सवे प्रथम उत्सवे काष्ट रथं द्वितीय रथोत्सवस्य तु स्वर्णरथं प्रमुज्यते।

अस्मिन् वर्षे अधिकमासस्य कारणात् वार्षिक ब्रह्मोत्सवं (सालकट्ल) १८ सेप्टेम्बर् तः २६ पर्यन्तं नवरात्रि ब्रह्मोत्सवं च अक्टोबर् १५तः २३ पर्यन्तं भविष्यति। एतेषु ब्रह्मोत्सवेषु भक्ताः भागं गृहीत्वा श्रीस्वामिनः कृपायोग्यतां प्राप्नुवन्तु।

## तिरुमल
## श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः
२०२३ सेप्टम्बर् १८ तः २६ पर्यन्तम्







18-09-2023 इन्दुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

19-09-2023 भौमवासरः
प्रातः - लघुशेषवाहनम् .... रात्रौ - हंसवाहनम्



20-09-2023 सौमवासरः
प्रातः - सिंहवाहनम् ... रात्रौ - मौक्तिकमण्टपम्



21-09-2023 बृहस्पतिवासरः
प्रातः - कल्पवृक्षवाहनम्

तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः
२०२३ सेप्टम्बर् १८ त: २६ पर्यन्तम्



21-09-2023 बृहस्पतिवासरः
रात्रौ - सर्वभूपालवाहनम्



22-09-2023
भृगुवासरः
रात्रौ
गरुडवाहनम्





23-09-2023
मन्दवासरः
प्रातः
हनुमद्वाहनम्
रात्रौ - गजवाहनम्



24-09-2023 भानुवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्



17.07-2023 दिनाङ्के तिरुमलक्षेत्रे ''अणिवर आस्थानम्'' सन्दर्भे आयोजित श्रीस्वामिनः ''पुष्पपल्लकी सेवा''।



09-08-2023 दिनाङ्के 'आडिकृत्तिक' सन्दर्भे तमिळनाडु तिरुत्तणि श्रीसुब्रह्मण्य स्वामिनः आलये प्रधान देवतामूर्तेः ति.ति.दे. पक्षतः विशेष वस्त्र समर्पणं ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.एस्.कृतवन्तः।



09-08-2023 दिनाङ्के 'आडिकृत्तिक' सन्दर्भे तिरुपति श्री कपिलेश्वर स्वामिनः आलये विराजितस्य श्री वल्लीदेवसेवासमेत श्री सुब्रह्मण्य स्वामिनः आयोजित स्नपनतिरुमञ्जन दृश्यम्।



२७-०७-२०२३ तिरुमलक्षेत्रे कावेरी विश्रान्तिगृहस्य प्रारम्भः पूर्व ति.ति.दे. अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पतयः कृतवन्तः। अस्मिन् चित्रे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि.,ऐ.डि.ई.एस्.,दातारः,हैदराबाद् स्थानिकमण्डलि अध्यक्षः भास्कर राव् महोदयः भागं गृहीतवन्तः।



27-07-2023 तिरुमलक्षेत्रे सम्पर्द समये स्वल्पकाले भक्तजनानां निवासार्थं "मोबैल् कण्टैनर्स्" पूर्वतन ति.ति.दे. अध्यक्षः श्री वै.वि.सुब्बारेड्डि महोदयः, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि. धर्मारेड्डि, ऐ.डि.ई.एस्. महोदयाः प्रारभं कृतवन्तः।



01-08-2023 दिनाङ्के आन्ध्रप्रदेश प्रभुत्व देवादायशाखा प्रत्येक प्रधानकार्यदर्शी श्री करिकाल वलवन्, ऐ.ए.एस् महोदयः, ति.ति.दे. पालकमण्डलि एक्स्-अफिषियो सभ्यरूपेण प्रमाणस्वीकारं कृतवान्। अनन्तरं श्री स्वामिनः छाया चित्र पटस्य समर्पणं ति.ति.दे. कार्यनिर्वहणादिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.ई.एस्. महोदयः कृतवान्।



15-07-2023 दिनाङ्के तिरुपति एस्.वि गोसंरक्षणशालायां कृत्रिमपद्धत्या जातान् गोवत्सान् आन्ध्रप्रदेश राष्ट्र प्रभुत्व प्रधानकार्यदर्शी डा. के. एस्. जवहर् रेड्डि, ऐ.ए.एस्., ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारी श्रीमती सदाभार्गवी, ऐ.ए.एस् च सन्दर्शितवन्तः।





# ब्रह्मोत्सव विशेषाः

- ए.पि.महाजन्
चरवाणी - ९४२००१४९६४

तिरुमलक्षेत्रे (गिरिषु) स्वयम्भूरूपेण स्थितस्य श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः इतर उत्सवेभ्यः विलक्षणः, विशिष्टः वैभवोपेतश्च।

उत् + सवः=उत्सवः। 'उत्' इत्युक्ते महान् इति एवञ्च 'सवः' इत्युक्ते यज्ञः इत्यर्थौ भवतः। विशेषतया एनं यज्ञं दशदिनानि ब्रह्मदेवः आचरितवानिति कारणात् अस्य 'ब्रह्मोत्सवः' इति नाम जातम्।

ब्रह्मोत्सवमेनं लोकक्षेमार्थं, नित्यपूजाहीनप्रायश्चित्तार्थं, नित्यपूजादोषप्रायश्चित्तार्थं तथा च सर्वाशुभनिवारणार्थं समाचरन्ति। एवञ्च भगवतः मूलबिम्बे (ध्रुवबेरे) स्थितायाः शक्तेः अभिवृद्ध्यर्थम् एनं ब्रह्मोत्सवम् आचरन्ति। अस्यैव 'महोत्सवः', 'तिरुनाल्लु', 'कल्याणोत्सवः' इति नामानि।

एकस्य आलयस्य प्रामुख्यं तत्र प्रचलतामुत्सवानामुपरि, आकर्षकयात्रेकसंख्यासमुदायानाम् उपरि, क्रियाकलापानामुपरि आधारितं भवति इति सर्वसाधारणविषयः। अस्मिन् कोणे पश्यामश्चेत् स्वामिनः वैभवम् अनुसृत्यैव तिरुमलायां ब्रह्मोत्सवनिर्वहणं भवति। ब्रह्मोत्सवः प्रतिवर्षं भवति। नगरे अथवा ग्रामे सर्वत्रापि उत्सवभरितवातावरणं दृश्यते। उत्सवानन्दे शोक विस्मरणं अस्माकं स्वभावः। प्राचीनानां एवम् अधुनातनानां मध्य बहु व्यत्यासः वर्तते। नानाविधानि परिवर्तनानि जातानि।

बहुभ्यः वर्षेभ्यः राजानः ब्रह्मोत्सवानां वैभवेन चरित्रपुटेषु स्थानं प्राप्तवन्तः। पुरा प्रतिमासं ब्रह्मोत्सवः आचर्यते स्म। एवं वर्षे द्वादशब्रह्मोत्सवाः आचरन्ति स्म। ते एव इदानीमपि अविच्छिन्नतया भवन्तीत्युक्ते तेषां महिमादयः एव प्रधानकारणीभूताः इति अवगन्तुं शक्नुमः। अनादिकालादेव बहवः महानुभावाः नानाविधान् व्ययान्, प्रयासान् च अनुभूय श्रीस्वामिने ब्रह्मोत्सवं प्रकल्प्य ब्रह्मोत्सवरूपीं ध्वजं प्रपञ्चे व्यापितवन्तः।

पुरा प्रतिमासं आचर्यमाणः ब्रह्मोत्सवः अधुना श्रीस्वामिने एकमासे (सेप्टेम्बर् - अक्टोबर्) मध्ये साक्षात् ब्रह्मदेवेन आरब्धः इति कारणात् वैभवेन क्रियते। श्री स्वामिनः उत्सवेषु ब्रह्मोत्सवः अत्यन्त प्रधानः। एवं कथितं ब्रह्मोत्सवं वीक्ष्य स्वामिसेवातत्परेभ्यः पुनर्जन्म न भवति। एवञ्च वाहनसेवानां दर्शनमपि मुक्तिप्रदायकं भवति।

शेषवाहनम् - कुटुम्बश्रेयसे, हंसवाहनम् - ब्रह्मपदप्राप्तये, सिंहवाहनम् - धैर्यसिद्धये मौक्तिकमण्डपवाहनम् - सकलसैभाग्यसिद्धये, कल्पवृक्षवाहनम् - ऐहिकामुष्मिकफलप्राप्तये, सर्वभूपालवाहनम् - यशोः प्राप्तये, मोहिन्यवतारः - मायामोहनाशनाय, गरुडवाहनम् - सर्वपापप्रायश्चित्तये हनुमद्वाहनम् - भगवद्भक्तिप्राप्तये, गजवाहनम् - कर्मविमुक्तये, सूर्यप्रभावाहनम् - आयुरारोग्यप्राप्तये, चन्द्रप्रभावाहनम् - मानसिकशान्तिप्राप्तये, रथोत्सवः - मनोवाञ्छाफलसिद्धये, अश्ववाहनम् - कलिकल्मषनाशनाय तथा च चक्रस्नानम् - सकलपापविमोचनाय भवन्तीति पुराणवागिति कारणात् एतासु सर्वासु सेवासु सर्वेऽपि भागं गृहीत्वा श्रीस्वामिनः कृपापात्राणि भवन्त्विति 'सप्तगिरिः' प्रार्थयते।





# श्रीकृष्णस्तोत्रकाव्यानि

- डा.सौम्यनारायणः
चरवाणी - ७९८९३९११७५

स्तु धातोः निष्पन्नं स्तोत्रमिति पदं स्तवार्थकम्। इष्टदेवता गुणकीर्तनपरं स्तोत्रम्। प्रशंसाकारकं सूत्रं सूक्तमिति निरुक्तिः। स्तवः, स्तोत्रं, स्तुतिः नुतिः इत्यमरकोशे दृश्यते।

**नमस्कारस्तथाशीश्च सिद्धान्तोक्तिः पराक्रमम्।**
**विभूतिः प्रार्थनाचेति षड्विधं स्तोत्रलक्षणम्।।**

संस्कृतसाहित्ये स्तोत्रसाहित्यम् अतीव विशिष्टं स्थानं अलङ्करोति। इष्टदेवतास्तुतिपराणां श्लोकाः एव स्तुतिः। वेदसंहिता विशेषतः अथर्ववेदसंहिता एव स्तुतीनाम् उत्पत्ति स्थानमिति मन्ये।

स्तोत्रकाव्येषु कवयः भक्तिभावेन भगवत् महिमवर्णनपुरस्सरं कोमलभावानां हृदयस्पर्शिवर्णनपुरस्सरं अभ्यर्थनं याचनं च अभिव्यक्ती - कुर्वन्ति। कयापि हृदयहारिण्या वाण्या। एषु प्रायशः करुण शान्तिरस परिपोषः एव स्फुरति। गीतिकाव्यानि आश्रित्यैव स्तोत्राणि प्रवर्तन्ते। संस्कृतसाहित्ये बहूनि स्तोत्रकाव्यानि सन्ति। तेषु श्रीकृष्णस्तुतिपराणि काव्यान्येव अत्र प्रस्तौमि।

## संस्कृते श्रीकृष्णस्तोत्रकाव्यानि।

**गीतगोविन्दम् -** राधामाधवचरिताख्यानरूपः द्वादशसर्गात्मकः ग्रन्थः भवति गीतगोविन्दम्। जयदेवः वङ्गनरेशस्य लक्ष्मणसेनस्य सभापण्डितः आसीत्। द्वादशशतकस्य प्रारम्भे एवास्य रचनाकालः। उत्कलस्य बिन्दुविल्वग्रामे तस्य जन्म कथ्यते। भावात्मके अस्मिन् काव्ये राधाकृष्णयोः परस्परानुरागः राधायाः विरहवैवश्यं च वर्ण्यते। अत्र हि नायकस्याचरणानुसारे अध्यायनाम अक्लेशकेशवः, मुग्धमधुसूधनः इत्यादि। कथ्यते हि कृष्णो ब्रह्म राधिका तु जीवात्मा। तेनहि अत्र ब्रह्मजीवात्मनो नायकानायिकासंबन्धः कल्पितः। आभारतं बहूनां कलारूपाणां साहित्यत्वेन गीतगोविन्दमुपयुज्यते। केरलेषु सोपानसंगीतसाहित्यरूपेण प्रचुरप्रचारमाप्तं भवति गीतगोविन्दम्। गीतिकाव्ये श्लोकः तदनन्तरं पदमिति क्रमः। एकैकस्य पदस्य अन्तिमे पादे श्रीजयदेवेति कविमुद्रापि दृश्यते। इदम् अष्टपदीति नाम्नापि प्रसिद्धम् भवति।

**श्रीकृष्णकर्णामृतम् -** कृष्णलीलाशुकाख्यस्य बिल्वमङ्गलस्य कृतिः एव श्रीकृष्णकर्णामृतम्। द्वादशशताब्धान्तिमे भागे मालावारप्रदेशे गृहीतजनुषः बिल्वमङ्गलः। इदं काव्यं त्रिषु भागेषु विभक्तम्। अत्र हि सन्ति ३३२ सख्याकश्लोकाः। अयं ग्रन्थ श्रीकृष्णभक्तितत्त्वप्रधानः भवति। साधारणतः भक्ति काव्यानि भगवत् स्तुतिपराणि भवन्ति। परन्तु लीलाशुकविरचितं कृष्णकर्णामृतम् अलङ्कारसमन्वितं, जीवनमूल्यसहितं च भवति। चिन्तामणिमुखतः श्रीकृष्णलीलाविशेषान् श्रुत्वा बिल्वमङ्गलः लीलाशुकः अभवत्। त्रीणि उच्छ्वासाः सन्ति। व्यत्यस्तवृत्तानि उपयुज्य कृष्णकर्णामृतस्यचरना। भक्तिश्रुङ्गारमिश्राणि पदानि द्रष्टुं शक्यते। श्रीकृष्णकर्णामृतस्य प्रचुरप्रचारात् लीलाशुकं स्तोत्रकविरीत्या ख्यातिमुपगतम्।

**श्रीकृष्णविलासम्** - भागवतपुराणमाश्रित्य सुकुमारकविना विरचितं महाकाव्यं भवति श्रीकृष्णविलासम्। कविनामसदृशं काव्यस्य शैली अपि सुकुमारः एव। अस्मिन् काव्ये श्रीकृष्णस्य परमोन्नतं मोहनविलासलीलता एव वर्ण्यविषयत्वेन स्वीकृता। दुष्टनिग्रहाय भूमीदेव्याः भगवत् दर्शनं, भगवतः नारायणस्य वाग्दानं, कंसेन अशरीरिवाक्यश्रवणं, श्रीकृष्णजननं, बाललीलाः, पूतनावधः शकटासुरवधः कालियमर्धनं एवं पारिजातहरणं इत्यादयः भागवतपुराणप्रतिपादिताः सर्वे प्रधानसन्दर्भाः प्रायेण काव्यस्य सन्दर्भे अनुगणत्वेन वर्णिताः। द्वादशसर्गात्मकं इदं काव्यं कथाश्चपरिसमाप्तिं न प्राप्नोति। पुराणस्य पुनराख्याने त्याज्यग्राविवेकः प्रशंसार्हं एव।

**श्रीकृष्णविजयम्** - श्रीकृष्णविलासकाव्यस्य मातृकायां केरलीयविख्यातसंस्कृतकविना शङ्करेण निर्मितं भवति श्रीकृष्णविजयं महाकाव्यम्। क्रिस्तोः परं पञ्चदशशतके एव अस्य रचनाकालः।

**गोविन्दचरितम्** - वेट्टत्त् राजानां आश्रितः वासुदेवकविः एव गोविन्दचरितस्य रचयिता। अस्मिन् काव्ये दश सर्गाः सन्ति। भागवतस्य दशमस्कन्धे वर्णितं भगवत्कथा एव काव्ये संग्रहरूपेण वर्णितं भवति।

**शौरिकथा** - कुलशेखरस्य आश्रितः आसीत् वासुभट्टतिरिः। अनेन विरचितं काव्यं भवति शौरिकथा। यमकरचनायां भट्टतिरेः अनुपमं पाडवं प्रसिद्धमेव। ललितपदप्रयोगेन काव्यं सरलम् अतीव हृद्यं च भवति। अस्मिन् काव्ये षट् आश्वासाः अन्तर्भवन्ति। भागवतस्य दशमस्कन्धे प्रतिपाद्यं लीलायाः संग्रहः अस्मिन् काव्ये वर्णितम् अस्ति।

**मुकुन्दमाला** - कविवरः कुलशेखरः एव अस्य ग्रन्थस्य कर्ता। सः त्रिवाङ्कुरराज्यस्याधिपतिः दशमशतकलब्धजन्मा वैष्णवधर्मपरायणः अनन्यसाधारणः मेधासम्पन्नः च प्रकाशयति। मुकुन्दमाला अतीव रमणीया हृदयहारिणी च भवति। अस्मिन् स्तोत्रे चतुर्त्रिंशत् पद्यानि अन्तर्भवन्ति। केरलदेशे पुरा मुकुन्दमालायाः प्रचुरप्रचारः आसीत्। मुकुन्दमालायाः व्याख्यानं राघवानन्देन कृतं भवति। ग्रन्थे शुद्धं तदा निष्कामभक्तिः एव प्राधान्यम् अलङ्करोति। काव्यस्यास्य शैली परिष्कृता प्राञ्जला च।

**नारायणीयम्** - मेल्पत्तूर् नारायण भट्टतिरेः नारायणीयं संस्कृतस्तोत्रकाव्येषु अतिप्रधानं स्थानमर्हति। भागवतं आधारीकृत्य विरचिते अस्मिन् स्तोत्रे शतदशकेषु अयुताधिकाः श्लोकाः सन्ति। गुरुवायुपुरेशं सम्बोधनं करोति कविः। भक्तिः एव अङ्गीरसः। नारायणीयम् इति नाम द्वेधा सार्थकं भवति। नारायणकथाप्रतिपादकं तथा नारायणकविना निर्मितं च भवति नारायणीयम्। भागवतस्य प्रथम नव स्कन्धेषु प्रतिपादिता कथा नारायणीये २-३६ तावत् दशकेषु संगृह्य रचिता भवति। दशमस्कन्धस्य कृष्णावतारकथा ३६ तमे दशके एव प्रारभ्यते। भगवद्गीता सर्वं एकेन श्लोकेन एव निर्दिशति। नारायणीये राधायाः अतीव प्राधान्यं द्रष्टुं शक्यते।

**कृष्णगीतिः** - भागवतं दशमस्कन्धे प्रतिपाद्यं भगवच्चरितमेव मानवेदनस्य कृष्णगीतेः कथावस्तु। अस्मिन् कविः भगवतः अवतारप्रभृति स्वर्गारोहणपर्यन्तं अष्ट कथाः एव विस्तारयति। इयं कृतिः आपादशिखरं भक्तिरसामृताभिषिक्ता भवति। मानवेदस्य शब्दप्रयोगकौशलं गीत्यां सर्वत्र द्रष्टुं शक्यते। संगीते अपि कविः निपुणः आसीत्।

**वासुदेवविजयम्** - श्रीकृष्णचरितम् आधारीकृत्य सप्तसर्गैः रचितम् एतत् काव्यं व्याकरणसूत्राणि उदाहरति। पदचन्द्रिका इति नाम्ना व्याख्यानमपि कविना एव रचितं भवति।

**श्रीकृष्णोदन्तम् श्रीकृष्णचरितम् च** - श्रीरामोदन्तकाव्यम् अनुसृत्य बालानाम् उपयोगाय अर्वाचीनकाले काव्ये आस्ताम्। एकम् श्रीकृष्णोदन्तम् द्वितीयः श्रीकृष्णचरितं च। श्रीकृष्णोदन्तस्य कर्ता कोट्टयं देशीयः वट्टप्पल्लि भास्करन् मूत्तत् महोदयः भवति। कोट्टूर् गोविन्दन् नम्प्यार् एव कृष्णचरितस्य कर्ता।

माधवं प्रणिपत्याहं मायाक्रीडाकृतक्षणम्।
श्रीकृष्णोदन्तमाख्यास्ये श्रीवेदव्यासप्रकीर्तितम्।।

वा

श्रीकण्ठं प्रणिपत्याहं श्रीकैलासनिवासिनम्।
श्रीकृष्णोदनन्तमाख्यास्ये श्रीवेदव्यासकीर्तितम्।। इति श्रीकृष्णोदन्तस्य प्रथमश्लोकः भवति।





# धन्यौ तौ



# दातृयाचकौ

कस्मिंश्चित् तपोवने वरतन्तुः नाम ऋषिः आसीत्। सः अध्यापने निपुणः प्रकृत्या दयालुः च आसीत्। तस्य आश्रमे बहवः मेधाविनः वटवः आसन्। तेषु कश्चित् कौत्सः नाम वटुः आसीत्। विद्याध्ययनं समाप्य गुरुदक्षिणां दातुमुत्सुकः कौत्सः गुरुम् उपागच्छत्। सविनयं च स्वस्य इच्छां गुरवे अकथयत्। तस्य वचः श्रुत्वा गुरुः उक्तवान्, "वत्स कौत्स, तव अध्ययनेन सेवया च भृशं प्रीतोऽस्मि। अन्यां कामपि दक्षिणां नेच्छामि। नेच्छामि। गच्छ, स्वस्ति तुभ्यम्।" गुरुणा वरतन्तुना निवारितः अपि कौत्सः वारंवारं दक्षिणां दातुम् ऐच्छत्।

तदा तं परीक्षितुं वरतन्तुः अकथयत् - "त्वया मम सकाशात् चतुर्दशविद्याः अधीताः। अतः चतुर्दशकोटिसुवर्णमुद्राः आनय।" गुरोः वचनं श्रुत्वा कौत्सः चिन्ताकुलः जातः। 'एतावतीः सुवर्णमुद्राः कुतः आनयानि? महाराजं रघुं विहाय न कोऽपि एतावतीः मुद्राः दातुं समर्थः। अतः रघुं प्रति गच्छामि' इति विचार्य कौत्सः रघोः समीपम् अगच्छत्।

दिग्विजयानन्तरं रघुः 'विश्वजित्' नाम्नि यज्ञे अशेषं धनं दानरुपेण अयच्छत्। रिक्तहस्तं रघुं दृष्ट्वा कौत्सः निवृत्तः। रघुः तम् आहूय आगमनस्य प्रयोजनम् अपृच्छत्। तदा कौत्सः अवदत् "रघो, अहं गुरुदक्षिणार्थं चतुर्दशकोटिसुवर्णमुद्राः गुरवे दातुमिच्छामि। किन्तु भवान् पूर्वमेव सर्वस्वदानम् अकरोत्। अतः अहम् अन्यत्र गच्छामि।" रघुः अवदत्, "हे कौत्स, तिष्ठ। मम यज्ञशालायां विश्रामं कुरु। अहं निश्चयेन तव साहाय्यं करोमि।"

कौत्सस्य गुरुभक्त्या प्रभावितः रघुः कुबेरमाक्रान्तुं सङ्कल्पम् अकरोत्। कुबेरः रघोः भयात् आक्रमणात् पूर्वमेव प्रभूतां सुवर्णवृष्टिमकरोत्। तत् दृष्ट्वा सन्तुष्टः रघुः कौत्सम् आहूय सर्वं सुवर्णं तस्मै दातुमैच्छत्। किन्तु निःस्पृहः कौत्सः अवदत् - "भोः राजन्, अहं केवलं गुरुदक्षिणार्थं चतुर्दशकोटिसुवर्णमुद्राः अभिलषामि। न वाञ्छामि अधिकम्।"

राजा सर्वस्वं दातुम् ऐच्छत् किन्तु याचकः अधिकमादातुं न अभ्यलषत्। अनेन प्रसङ्गेन दानशूरः रघुः तथा निरिच्छः कौत्सः च द्वावपि साकेतजनानां (अयोध्यावासिनां) कृते पूजनीयौ अभवताम्।



चित्रकथा

# कालिय मर्दनम्

तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

1 एकस्मिन् दिने गोपालकाः यमुनानदीतीरे गाः चारयन्ति स्म। श्रीकृष्णबलरामौ अपि गोभिः सह एव स्तः स्म। तस्मिन् पशवः पिपासया नद्यां जलं पीत्वा मृताः च अभवन्। गोपालकाः भयेन.....












(11) कृष्णाय सर्वे रुदन्ति। बलरामः तान् लालयति।




(13) कालियः कोपात् कृष्णस्य शरीरं दष्टवान्। वालेन बद्धवान्।




(16) श्रीकृष्णः स्वस्य शरीरं वर्धयति। नागराजस्य बन्धनं विमुक्तं जातम्।




(18) कालियस्य फणानाम् उपरि श्री कृष्णः हस्तेन ताडितवान्। तस्य फणानाम् उपरि कूर्दित्वा उत्थितवान्। नाट्यमपि करोति स्म।




(20) कालियस्य गर्वः गतम्। फणान् अधःकृतवान्। देवाः पुष्प वृष्टिं कृतवन्तः। कालियस्य भार्याः तासां पत्युः अपराधस्य मोचनं करोतु इति प्रर्थितवत्यः।







(23) कालियः तस्य भार्याः मिलित्वा श्रीकृष्णं स्तुतवन्तः।




सर्वे जनाः सुखिनो भवन्तु

स्वस्ति

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?








## रसप्रश्नाः

१. 'असतो मा सद्गमय' इति ध्येयवाक्यं कुत्र अस्ति?

२. कैलासे शिवस्य उद्यानवनस्य नाम किम्?

३. कपिध्वजः इति कस्य अपरं नाम?

४.विनायकस्य विश्वरूपवर्णनं कस्मिन् पुराणे अस्ति?

५.दशरथस्य पुत्रः कः?

६.उलूची कस्य पुत्री?

(समाधानानि - १. बृहदारण्यकोपनिषदि २. कल्पलः ३. अर्जुनस्य ४. गणेशपुराणे ५. रामः ६. नागराजस्य)

भेदाः कुत्र?



(१.बृहत् दीपः नास्ति २. वामभागे लघुदीपः नास्ति ३. दक्षिणभागे लघुदीपः नास्ति ४.पुष्पपुटम् नास्ति ५. नीराजनस्थालिका नास्ति ६. पुष्पाणि न सन्ति ७. नैवेद्यस्थालिका नास्ति)



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि



१३

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. विराटराज्ये सहदेवस्य नाम किम्?
२. परशुरामस्य रथसारथेः नाम किम्?
३. तिरुमलक्षेत्रस्य अपरं नाम किम्?
४. तिरुपतिनगरस्य अपरं नाम किम्?
५. दुर्योधनस्य पुत्रस्य नाम किम्?
६. महाभारतस्य पूर्वनाम किम्?
७. देवपुरोहितः कः?
८.रामायणमिव २४००० श्लोक सहित पुराणस्य नाम किम्?
९. बलिचक्रवर्ती कस्मिन् लोके भवति?
१०. सिन्धुदेशाधीशः कः?
११. धृतराष्ट्रस्य अन्तिमः पुत्रः कः?
१२. वसुषेणः वैकर्तनिः इति नामान्तराणि कस्य सन्ति?
१३. वृषपर्वस्य पुत्री का?
१४. नहुषस्य कुमारः कः?
१५. धौम्यः कस्य अनुजः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयन! DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. प्रश्नोत्तयाः उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०९.२०२३ अस्ति।

| | | | |
|---|---|---|---|
| Subscription Number | : | Address | : |
| Name | : | | |
| Mother | : | | |
| Father | : | Phone Number | : |

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

# तिरुमलतिरुपतिदेवस्थानानि





तिरुमल तिरुपति देवस्थानेषु पालकमण्डल्याः अध्यक्षरूपेण श्री वाई.वी.सुब्बारेड्डि महाभागाः २२-०६-२०२१ तः ७-०८-२023 पर्यन्तं कार्यं कृतवन्तः। तेषां सेवायाः चतुर्वर्षेषु अधिकशः सामान्यभक्तानाम् श्रीवेङ्कटेश्वरस्य दर्शनं प्रदातुं L1,L2,L3 पद्धतिं निष्कासितवन्तः। ते अवदन् यत् विरामसमये (Break time) परिवर्तनेन कृताः निर्णयाः सर्वाधिकं सन्तोषजनकाः सन्ति इति। एतैः अनेकेषां तिरुमल-नगरं गच्छतां सामान्यभक्तानाम् आवाससुविधानां सम्यक्करणाय निर्णयाः कृताः। श्रीपद्मावती शिशु अत्याधुनिकवैद्यशाला निर्माणं श्री वेंकटेश्वर आयुर्वेदिकवैद्यशालायाः, अतिरिक्त तलनिर्माण, भूतलविकासकार्यं, आयुर्वेद महाविद्यालय छात्रावासभवनस्य अधिकतल निर्माणं, तेलुगुराज्येषु श्रीवाणीनिधि द्वारा २६ मन्दिर विकासः इत्यादीनि कार्याणि कृतानि। पदवीविरमण सन्दर्भे एते एतवत् पर्यन्तं स्वामिभक्तानां सेवां कर्तुं अवकाशं प्रदत्तवतः श्रीवेङ्कटेश्वरस्वामिनः, भक्तानां च अयं धन्यवादान् दत्तवन्तः। तेषां धन्यवादाः।

ति.ति. देवस्थानस्य नूतनपालक मण्डल्यः अध्यक्षत्वेन तिरुपति शासन सदस्यः गौरवनीयः श्री भूमनकरुणाकर रेड्डि महोदयः नियोजितः। १0.0८.2023 प्रातः श्री गरुडाल्वार् सन्निधौ ति.ति.दे. कार्यनिर्वहणाधिकारिणा श्री ए, वि. धर्मरेड्डि ऐ.डि.ई.एस्., महोदयेन प्रमाण स्वीकारं कारितः।

अस्मिन् अवसरे ते एवमुक्तवन्तः - स्वामिनः दर्शनं कर्तुं सामान्यभक्तानां प्राधान्यं ददामि। धनिकानां सेवां कर्तुं अहं नास्मि इति। यदि वी. आई.पी. दर्शनानां कृते महान्तं प्रयत्नं कुर्वाचानां विषये दैवानुग्रहः दुर्लभः भवतीति भक्तजनेः मनसि स्थपिनीयम् इति। ये न्यासमण्डलस्य अनेके अध्यक्षाः, कार्यप्रबन्धकाः, कर्मचारिणः च भगवति अचञ्चलभक्त्या विश्वासेन च कार्यं कृतवन्तः। तेषां परिश्रमेण ति.ति.देवस्थानेषु समीचीना व्यवस्था सजाता इति च। एतवचनस्याः अग्रे नीत्वा सनातनहिन्दूधर्मस्य वैश्विकरूपेण प्रचारं करिष्यामि तथा च समाजसेवाकार्यक्रमाणाम् आयोजनं करिष्यामि। देशविदेशेषु सर्वान् हिन्दूजनान् एकत्र आनेतुं हिन्दूधर्मस्य प्रचारार्थं च अहं नेतृत्वं करिष्यामि इति च अवदन्। तेषां शुभाशयाः।



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-08-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

26-09-2023
भौमवासरः
प्रातः - चक्रस्नानम्

25-09-2023
इन्दुवासरः
प्रातः - रथोत्सवः

25-09-2023 इन्दुवासरः
रात्रौ - अश्ववाहनम्